# इन्द्राक्षी स्तोत्रम्

*श्री मार्कण्डेय पुराण*

ॐ अस्य श्री इन्द्राक्षी स्तोत्र महामन्त्रस्य शचीपुरंदर ऋषिः अनुष्टुप् छंदः । इन्द्राक्षी देवता । महालक्ष्मीर्बीजम् । भुवनेश्वरी शक्तिः । महेश्वरी कीलकम् । इन्द्राक्षी देवी प्रसाद सिद्ध्यर्थे जपे विनियोगः ।

**अथ करन्यासः**

ॐ इन्द्राक्षीं अंगुष्ठाभ्यां नमः
ॐ महालक्ष्मी तर्जनीभ्यां नमः
ॐ महेश्वरीं मध्यमाभ्यां नमः
ॐ अम्बुजाक्षीं अनामिकाभ्यां नमः
ॐ कात्यायिनीं कनिष्ठिकाभ्यां नमः
ॐ कौमारीं करतलकरपृष्ठाभ्यां नमः

**अथ अङ्गन्यासः**

ॐ इन्द्राक्षीं हृदयाय नमः
ॐ महालक्ष्मीं शिरसे स्वाहा
ॐ महेश्वरीं शिखायै वषट्
ॐ अम्बुजाक्षीं कवचाय हुं
ॐ कात्यायिनीं नेत्रत्रयाय वौषट्
ॐ कौमारीं अस्त्राय फट्
॥ भू–र्भूवस्सुवरोमिति दिग्बन्धः ॥

**॥ अथ ध्यानम् ॥**

नेत्राणां दशभिश्शतैः परिवृतामत्युग्र चर्माम्बरां ।
हेमाभां महतीं विलम्बित शिखा मा मुक्तकेशान्वितां
घण्टामण्डित पादपद्मयुगलां नागेन्द्रकुम्भस्तनीं ।
इन्द्राक्षीं परिचिन्तयामि सततं प्रत्यक्ष सिद्धिप्रदाम् ॥
इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्र द्वयान्वितां ।
वामहस्ते वज्रधरां दक्षिणेन वरप्रदाम् ।
इन्द्राक्षीं नौमि युवतीं नानालंकार भूषितां ।
प्रसन्न वदनाम्भोजां अप्सरोगण सेविताम् ॥

**॥ अथ इन्द्राक्षी स्तोत्र प्रारम्भः ॥**

*॥ इन्द्र उवाच ॥*

इन्द्राक्षी पूर्वतः पातु पात्वाग्नेय्यां तथेश्वरी ।
कौमारी दक्षिणे पातु नैर्ऋत्यां पातु पार्वती ॥

वाराही पश्चिमे पातु वायव्ये नारसिंह्यपि ।
उदीच्यां कालरात्रिर्मामीशन्यां सर्वशक्तयः ॥

भैरव्यूर्ध्वं सदा पातु पात्वधो वैष्णवी तथा ।
एवं दशदिशो रक्षेत्सर्वाङ्गं भुवनेश्वरी ॥

इन्द्राक्षी नाम सा देवी दैवतैः समुदाहृता ।
गौरी शाकम्भरी देवी दुर्गानाम्नीति विश्रुता ॥

कात्यायनी महादेवी चण्डघंटा महातपाः ।
सावित्री सा च गायत्री ब्रह्माणी ब्रह्मवादिनी ॥

नारायणी भद्रकाली रुद्राणी कृष्ण पिङ्गला ।
अग्निज्वाला रौद्रमुखी कालरात्री तपस्विनी ॥

मेघस्वना सहस्राक्षी विकटाङ्गी जडोदरी ।
महोदरी मुक्तकेशी घोररूपा महाबला ॥

अजिता भद्रदाऽनन्ता रोगहर्त्री शिवप्रिया ।
शिवदूती कराली च शक्तिश्च परमेश्वरी ॥

आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ।
महिषासुर संहारी चामुण्डा सप्तमातृका ॥

सर्वरोग प्रशमनी नारायणी नमोऽस्तुते ।
इन्द्राणी चेन्द्ररूपा च इन्द्रशक्तिः परायणी ॥

वाराही नारसिंही च भीमा भैरव नादिनी ।
सदा संमोहिनी देवी सुन्दरी भुवनेश्वरी ।
एकाक्षरी महामायी एकाङ्गी एकनायकी ॥

कोमल श्यामलारूपी कोटिसूर्यप्रकाशिनी ।
श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती ॥

अनन्ता विजयाऽपर्णा मानस्तोकाऽपराजिता ।
भवानी पार्वती दुर्गा हैमवत्याम्बिका जया ॥

शिवा भवानी रुद्राणी शङ्करार्धशरीरिणी ।
ऐरावत गजारूढा वज्रहस्ता धनुर्धरा ॥

ऐन्द्री देवी सदाकालं शान्तिमाशु करोतु मे ।
एतैर्नाम पदैर्दिव्यैः स्तुता शक्रेण धीमता ॥

आयुरारोग्यं ऐश्वर्यं अपमृत्यु भयापहं ।
क्षयाऽपस्मारकुष्ठादि तापज्वर निवारणं ।
शीतज्वर निवारणं ऊष्णज्वर निवारणं ।
सन्निज्वर निवारणं सर्वशत्रु निवारणं ।
महाभय निवारणं मनःक्लेश निवारणं ।
शतमावर्तयेद्यस्तु मुच्यते व्याधिबन्धनात् ।
आवर्तयन् सहस्रः तु लभते वाञ्छितं फलं ।
एतत् स्तोत्रं जपेन्नित्यं सर्वव्याधि विनाशनं ।
रणे राजभये चोरे सर्वत्र विजयी भवेत् ॥

सर्व माङ्गल्य माङ्गल्ये शिवे सर्वार्थ साधिके ।
शरण्ये त्र्यम्बिके गौरी नारायणी नमोऽस्तुते ॥

त्रिपाद्भस्म प्रहरणस्त्रिशिरा रक्तलोचनः ।
स मे प्रीतः सुखं दद्यात् सर्वामय पतिर्ज्वरः ।
ज्वरं च ज्वरसारं च ज्वरातीसारमेव च ।
सन्निपात ज्वरं चैव शीतोष्ण ज्वरमेव च ।
कौबेरन्ते मुखं रौद्रं नन्दिमन्नन्दिमावह ।
ज्वरं मृत्युभयं घोरं ज्वरं नाशये मे ज्वर ।
भस्मायुधाय विद्महे रक्तनेत्राय धीमहि ।
तन्नो ज्वरः प्रचोदयात् ॥

ज्वरराजाय विद्महे त्रिशिरस्काय धीमहि ।
तन्नस्त्रिपात् प्रचोदयात् ॥

मृत्योस्तुल्यं त्रिलोकीं ग्रसितु–
मतिरसान्निस्सृताः किं नु जिव्हाः
किं वा कृष्णांघ्रिपद्मद्युतिभि–
ररुणिता विष्णुपद्याः पदव्यः ।
प्राप्ताः संध्याः स्मरारेः स्वयमुत–
नुतिभिस्तिस्र इत्यूह्यमानाः
दिव्यैर्देव्या स्त्रिशूलक्षत
महिषजुषो रक्तधारा जयन्ति ॥

मातर्मे मधुकैटभग्नि महिषप्राणामहारोद्यमे
हेला निर्मित धूम्रलोचन वधे हे चण्डमुण्डार्दिनी ।
निश्येषीकृत रक्तबीजदनुजे नित्ये निशुम्भापहे
शुम्भध्वंसिनि संहराशुदुरितं दुर्गे नमस्तेऽम्बिके ॥

अष्टौ भुजाङ्गी महिषस्यमर्दिनीं
सशंखचक्रां शरशूलधारिणीं ।
तां दिव्ययोगीं सहजातवेदसीं
दुर्गां सदाऽहं शरणं प्रपद्ये ॥

महिषमस्तक नृत्तविनोदन
स्फुट–रणन्मणि–नूपुरमेखला ।
जनन रक्षण मोक्षविधायिनी
जयतु शुम्भनिशुम्भ निशूदिनी ॥

ब्रह्माणी कमलेन्दु सौम्यवदना माहेश्वरी लीलया
कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी ।

वाराही घनघोर घर्घरमुखीदंष्ट्री च चक्रायुधा
चामुण्डा गणनाथ रुद्रसहिता रक्षन्तु मां मातरः ॥

उद्धतौ मधुकैटभो महिषासुरं तु निहत्य तं
धूम्रलोचन चण्डमुण्ड रक्तबीजमुखांश्चतान् ।
दुष्ट शुम्भनिशुम्भमर्दिनी नन्दितामरवन्दिते
विष्टपत्रय पुष्टिकारिणि भद्रकालि नमोऽस्तुते ॥

लक्ष्मी प्रदान समये नवविद्रुमाभां
विद्या प्रदान समये शरदिन्दु शुभ्रां।
विद्वेषि वर्गविजयेऽपि तमाल निलां
देवीं त्रिलोक जननीं शरणं प्रपद्ये ॥

श्री महादेव्यै नमः ॥

*इति इन्द्राक्षी स्तोत्रं सम्पूर्णम् ॥*